अथ

# दुर्गाकवचम्

अर्गलाकीलकपाठसहितं प्रारभ्यते ।

# अथ दुर्गाकवचम् ।

ॐ नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥
ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरन्नृणाम् ॥ यन्न
कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥ ब्रह्मो-
वाच ॥ अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ॥
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥



प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी ॥ तृतीयं चन्द्र-
घण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥ पञ्चमं स्कन्द-
मातेति षष्ठं कात्यायनीति च ॥ सप्तमं कालरात्रिश्च
महागौरीति चाष्टमम् ॥ ४ ॥ नवमं सिद्धिदात्री च
नव दुर्गाः प्रकीर्तिताः ॥ उक्तान्येतानि नामानि ब्रह्म-
णैव महात्मना ॥ ५ ॥ अग्निना दह्यमानस्तु शत्रु-
मध्ये गतो रणे ॥ विषमे दुर्गमे चैव भयार्ताः शरणं

गताः ॥ ६ ॥ न तेषां जायते किञ्चिदशुभं रणसङ्कटे ॥
नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥७॥ यैस्तु
भक्त्या स्मृता नून तेषां सिद्धिः प्रजायते ॥ प्रेतसंस्था
तु चामुण्डा वाराही महिषासना ॥ ८ ॥ ऐन्द्री गज-
समारूढा वैष्णवी गरुडासना ॥ माहेश्वरी वृषारूढा
कौमारी शिखिवाहना ॥ ९ ॥ ब्राह्मी हंससमारूढा
सर्वाभरणभूषिता ॥ लक्ष्मीः पद्मासना देवी पद्महस्ता



हरिप्रिया ॥ १० ॥ श्वेतरूपधरा देवी ईश्वरी वृषवा-
हना ॥ इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ॥११॥
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥ दृश्यन्ते
रथमारूढा देव्यः क्रोधसमाकुलाः ॥ १२ ॥ शङ्खं चक्रं
गदां शक्तिं हलञ्च मुसलायुधम् ॥ खेटकं तोमरं चैव
परशुं पाशमेव च ॥१३॥ कुन्तायुधं त्रिशूलं च शार्ङ्ग-
मायुधमुत्तमम् ॥ दैत्यानां देहनाशाय भक्तानामभयाय

च ॥ १४ ॥ धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥ नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे ॥ १५ ॥ महाबले महोत्साहे महाभयविनाशिनि ॥ त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि ॥ १६ ॥ प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ॥ दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥ १७ ॥ प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ॥ उदीच्यां पातु कौबेरी



ईशान्यां शूलधारिणी ॥ १८ ॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ॥ एवं दशदिशो रक्षेच्चामुण्डा शववाहना ॥ १९ ॥ जया मे चाग्रतः स्पातु विजया स्थातु पृष्ठतः ॥ अजिता वामपार्श्वे तु दक्षिणे चापराजिता ॥ २० ॥ शिखां मे द्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ॥ मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ २१ ॥ त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ॥

शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २२ ॥
कपोलौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ॥ ना-
सिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ॥ २३ ॥
अधरे चामृतकला जिह्वायां च सरस्वती ॥ दन्तान्
रक्षतु कौमारी कण्ठदेशे तु चण्डिका ॥ २४ ॥ घ-
ण्टिकां चित्रघण्टा च महामाया च तालुके ॥ कामाक्षी
चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २५ ॥ ग्रीवायां भद्र-



काली च पृष्ठवंशे धनुर्धरी ॥ नीलग्रीवा बहिष्कण्ठे
नलिकां नलकूबरी ॥ २६ ॥ स्कन्धयोः खड्गिनी रक्षेद्
बाहू मे वज्रधारिणी ॥ हस्तयोर्दण्डिनी रक्षेदम्बिका
चाङ्गुलीषु च ॥ २७ ॥ नखाञ्छूलेश्वरी रक्षेत् कुक्षौ
रक्षेन्नलेश्वरी ॥ स्तनौ रक्षेन्महादेवी मनश्शोकविना-
शिनी ॥ २८ ॥ हृदये ललिता देवी ह्युदरे शूलधारि-
णी ॥ नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा

॥ २९ ॥ कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी॥
पूतना कामिका मेढ्रं गुदे महिषवाहिनी ॥ ३० ॥ जंङ्घे
महाबला रक्षेत सर्वकामप्रदायिनी ॥ गुल्फयोर्नारसिंही
च पादपृष्ठेऽमितौजसी ॥ ३१ ॥ पादाङ्गलीषु श्री रक्षेत
पादाधस्तलवासिनी ॥ नखान् दंष्ट्राकराली च केशां-
श्चैवोर्ध्वकेशिनी ॥ ३२ ॥ रोमकूपेषु कौबेरी त्वचं
वागीश्वरी तथा ॥ रक्तमज्जावसामांसान्यस्थिमेदांसि



पार्वती ॥ ३३ ॥ अन्त्राणि कालरात्रिश्च पित्तं च मु-
कुटेश्वरी ॥ पद्मावती पद्मकोशे कफे चूड़ामणिस्तथा
॥ ३४ ॥ ज्वालामुखी नखज्वालामभेद्या सर्वसन्धिषु ॥
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा ॥ ३५ ॥
अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ॥ प्राणापानौ
तथा व्यानमुदानं च समानकम् ॥ ३६ ॥ वज्रहस्ता
च मे रक्षेत्प्राणं कल्याणशोभना ॥ रसे रूपे च गन्धे

च शब्दे स्पर्शे च योगिनी ॥ ३७ ॥ सत्त्वं रजस्तम-
श्चैव रक्षेन्नारायणी सदा ॥ आयुर्मे रक्ष वाराहि धर्मं
रक्षत वैष्णवी ॥ ३८ ॥ यशः कीर्तिं च लक्ष्मीं च धनं
विद्यां च चक्रिणी ॥ गोत्रमिन्द्राणी मे रक्षेत्पशून् मे
रक्ष चण्डिके ॥ ३९ ॥ पुत्रान् रक्षेन्माहालक्ष्मीर्भार्यां
रक्षतु भैरवी ॥ पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा
॥ ४० ॥ राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता ॥



रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥ ४१ ॥ त-
त्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥ पदमेकं
न गच्छेत्तु यदीच्छेच्छुभमात्मनः ॥ ४२ ॥ कवचेना-
वृतो नित्यं यत्र यत्राधिगच्छति ॥ तत्र तत्रार्थलाभश्च
विजयः सार्वकामिकः ॥ ४३ ॥ यं यं चिन्तयते कामं
तं तं प्राप्नोति निश्चितम् ॥ परमैश्वर्यमतुलं प्राप्स्यते
भूतले पुमान् ॥ ४४ ॥ निर्भयो जायते मर्त्यः संग्रामे-

ष्वपराजितः ॥ त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् ॥४५॥ इदं तु देव्याः कवचं देवानामपि दुर्लभम्॥ यः पठेत्प्रातरुत्थाय त्रिसन्ध्यं श्रद्धयान्वितः ॥४६॥ दैवी कला भवेत्तस्य त्रैलोक्येष्वपराजितः ॥ जीवेद्वर्ष-शतं साग्रमपमृत्युविवर्जितः ॥ ४७ ॥ नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥ स्थावरं जङ्गमं वापि कृत्रिमञ्चापि यद्विषम् ॥४८॥ अभिचाराणि सर्वाणि



मन्त्रयन्त्राणि भूतले ॥ भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ॥ ४९ ॥ सहजाः कुलजा माला डाकिनी शाकिनी तथा ॥ अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ॥ ५० ॥ ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः॥ ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः॥५१॥ नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते॥ मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् ॥ ५२॥ यशसा

वर्द्धते सोऽपि कीर्तिमण्डितभूतले ॥ जपेत्सप्तशतीं चण्डीं
कृत्वा तु कवचं पुरा ॥५३॥ यावद्भूमण्डलं धत्ते सशै-
लवनकाननम् ॥ तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रि-
की ॥ ५४ ॥ देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥
प्राप्नोति पुरुषो नित्यं महामाया प्रसादतः ॥ लभते परमं
रूपं शिवेन सह मोदते ॥ ५५ ॥ इति श्रीवाराहपुराणे
हरिहरब्रह्मविरचितं देव्याः कवचं सम्पूर्णम् ॥ १ ॥

# अथ अर्गलास्तोत्रम् ।

ॐ अस्य श्रीअर्गलास्तोत्रमन्त्रस्य विष्णु-
ऋषिः । अनुष्टुप्छन्दः । श्रीमहालक्ष्मीर्देवता । श्रीज-
गदम्बाप्रीतये सप्तशतीपाठाङ्गजपे विनियोगः ॥ ॐ
नमश्चण्डिकायै ॥ जयन्ती मङ्गला काली भद्रकाली
कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा
नमोऽस्तु ते ॥ १ ॥ मधुकैटभविद्रावि विधातृवरदे

नमः ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २ ॥ महिषासुरनिर्णाशि धूम्राक्षस्य च मर्दिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥ रक्तबीजवधे देवि चण्डमुण्डविनाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥ निशुम्भमथने देवि शुम्भासुरनिबर्हिणि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥ वन्दिताङ्घ्रियुगे देवि



सर्वसौभाग्यदायिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥ अचिन्त्यरूपचरिते सर्वशत्रुविना-शिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ७ ॥ न तेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ८ ॥ चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ९ ॥ स्तुव-

द्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १० ॥ देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ११ ॥ विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १२ ॥ विधेहि देवि कल्याणं विधेहि विपुलां श्रियम् ॥ रूपं देहि जयं



देहि यशो देहि द्विषो जहि ॥ १३ ॥ सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥ प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥ विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १६ ॥ चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ॥

रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥
कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदाम्बिके ॥ रूपं
देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥
हिमाचलसुतानाथसंस्तुते परमेश्वरि ॥ रूपं देहि जयं
देहि यशो देहि द्विषो जहि ॥ १९ ॥ इन्द्राणीपतिस-
द्भावपूजिते परमेश्वरि ॥ रूपं देहि जयं देहि यशो
देहि द्विषो जहि ॥ २० ॥ देवि प्रचण्डदोर्दण्डदैत्य-



दर्पविनाशिनि ॥ रूपं देहि जयं देहि यशो देहि द्विषो
जहि ॥ २१ ॥ देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बि-
के ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि
॥ २२ ॥ पुत्रान्देहि धनं देहि सर्वान् कामाँश्च देहि
मे ॥ रूपं देहि जयं देहि यशो देहि द्विषो जहि
॥ २३ ॥ पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ॥
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २४ ॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ॥ स तु सप्त-
शतीसंख्यावरमाप्नोति सम्पदाम् ॥ २५ ॥

इति अर्गलास्तोत्रं समाप्तम् ॥ २ ॥



## * अथ कीलकम् *

ॐ अस्य श्रीकीलकमन्त्रस्य कौशिक ऋषिः ।
अनुष्टुप्छन्दः । श्रीमहासरस्वती देवता । श्रीजगद-
म्बाप्रीत्यर्थं सप्तशतीपाठाङ्गजपे विनियोगः ॥ ॐ नम-
श्चण्डिकायै ॥ मार्कण्डेय उवाच ॥ विशुद्धज्ञानदेहाय
त्रिवेदीदिव्यचक्षुषे ॥ श्रेयःप्राप्तिनिमित्ताय नमः

सोमार्धधारिणे ॥ १ ॥ सर्वमेतद्विजानीयान्मन्त्राणा-
मपि कीलकम् ॥ सोऽपि क्षेममवाप्नोति सततं जाप्य-
तत्परः ॥ २ ॥ सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि
सकलान्यपि ॥ एतेन स्तुवतां देवी स्तोत्रमात्रेण
सिद्ध्यति ॥३ ॥ न मन्त्रो नौषधं तत्र न किञ्चिदपि
विद्यते ॥ विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम्



॥ ४ ॥ समस्तान्यपि सिद्ध्यन्ति लोकशङ्कामिमां
हरः ॥ कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम्
॥ ५ ॥ स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार
सः ॥ समाप्नोति सुपुण्येन यथावदभिमन्त्रणम् ॥६॥
सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः ॥ कृष्णायां
वा चतुर्दश्यामष्टम्यां वा समाहितः ॥ ७ ॥ ददाति

प्रतिगृह्णाति नान्यथैषा प्रसीदति ॥ इत्थं रूपेण कीलेन
महादेवेन कीलितम् ॥ ८ ॥ यो निष्कीलां विधायैनां
नित्यं जपति संस्फुटम् ॥ स सिद्धः स गणः सोऽपि
गन्धर्वो जायते नरः ॥ ९ ॥ न चैवाप्यटतस्तस्य भयं
क्वापि हि जायते ॥ नाल्पमृत्युवशं याति मृतो मोक्ष-
मवाप्नुयात् ॥ १० ॥ ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वा-



णो विनश्यति ॥ एवं ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते
बुधैः ॥ ११ ॥ सौभाग्यादि च यत्किञ्चिद्दृश्यते
ललनाजनैः ॥ तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं
शुभम् ॥ १२ ॥ शनैस्तु जप्यमानेऽस्मिन्स्तोत्रे सम्प-
त्तिरुच्चकैः ॥ भवत्येव समग्रापि ततः प्रारभ्यमेव तत्
॥ १३ ॥ ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः ॥

शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥१४॥
इति भगवत्याः कीलकस्तोत्रं समाप्तम् ॥ ३ ॥

॥ श्रीजगदम्बार्पणमस्तु ॥

बाबू कैलासनाथ भार्गव द्वारा, भार्गवभूषण प्रेस, काशी में मुद्रित ।

